# षट्पञ्चाशिका

ऱ्यात्मा सच्चित्सुखो दत्तो रक्तोष्णाकाशदीपवत् ।
मायाब्धिनौर्दृढाऽसङ्गा तद्भक्तिर्न तथा प्लवः ॥ १॥

भवाध्वतापश्रान्तस्य सीतारामः समाश्रयः ।
यथाध्वतापश्रान्तस्य शीतारामः समाश्रयः ॥ २॥

भवाम्बुधिनिमग्नस्य तारिणी भगवत्कथा ॥

यथाम्बुधिनिमग्नस्य तरणिर्विधिचोदिता ॥ ३॥

भवतापाभितप्तस्य शरणं न गुरोः परम् ।
दवतापाभितप्तस्य शरणं न धनात्परम् ॥ ४॥

रोचते सुविरक्तस्य न सांसारिकपुङ्कथा ।
यथा पित्तज्वरार्तस्य सुरसान्नादिसत्कथा ॥ ५॥

शृणोति सर्वं सन्न्यस्य श्रुतिवार्तां स आदरात् ।
परव्यसनिनी नारी जारवार्तां यथाऽऽदरात् ॥ ६॥

कथञ्चन त्यजेन्नैव विवेकी शान्तिगेहिनीम् ।
यथा कामसन्तप्तोऽविवेकी कान्तगेहिनीम् ॥ ७॥

मुक्तिर्न सुलभाऽध्यासभातनानात्वदर्शिनः ।
आदर्शबिम्बितानेकद्वारदर्शिशिशोरिव ॥ ८॥

धीमाञ्छमादिसम्पन्नः सद्गुरूक्त्या लभेत्पदम् ।
चोरैस्त्यक्तो वने यद्वत्तदभिज्ञगिरा नरः ॥ ९॥

भवान्भूमेत्यकर्तात्मत्वं व्रजेत्सद्गुरोर्गिरा ।
भिल्लपालितराट्पुत्र आप्तोक्त्या राजतामिव ॥ १०॥

कूटस्थसच्चिदानन्दतनोर्बन्धविमोचने ।
पुत्रस्य जातिवन्ध्याया इव जन्मोत्सवात्ययौ ॥ ११॥

वाचारम्भणमात्रं चित्तनौ विश्वं न चापरम् ॥

वस्त्वन्तरं यथा ध्वान्ते रज्जौ सर्पविसर्पणम् ॥ १२॥

विषयग्रहणेच्छा तु स्वात्मविज्ञानतः पुरा ।
अज्ञस्य शुक्तिविज्ञानात्पुरेव रजसस्पृहा ॥ १३॥

भ्रममात्रमसद्विश्वं ज्ञातं चेत्तेन कः सुखी ।
को नाम शुक्तिरौप्येण जातो धनसमृद्धिमान् ॥ १४॥

जगदस्तित्ववादो न स्वात्मज्ञाने प्रकाशिते ।
ध्वान्ते स्थाणौ पिशाचादिभ्रान्तिर्दीप इवाहृते ॥ १५॥

आश्चर्यमेतद्विश्वं न पुराद्योर्ध्वं न भाति चेत् ।
भातु नामेन्द्रजालाभं चिदात्मनि तु मायया ॥ १६॥

असच्चेज्ज्ञस्य नेतोऽपि व्यवहारः क्षणं कुतः ।
नायं दोषोऽपि जानन्सन्निन्द्रजालं हि वीक्षते ॥ १७॥

एकोऽपि सन्नयं भूमा मायया भात्यनेकवत् ।
पुंसो यथाक्षिदोषेण चन्द्र एको द्वितीयवत् ॥ १८॥

आत्मोपाधिवशाद्भाति निश्चलोऽपि हि चञ्चलः ।
विकारी निर्विकारोऽपि जलोपाधिगतार्कवत् ॥ १९॥

नित्यं भ्रमादिवाभाति मायाभ्रमविजृम्भितम् ।
जगच्चक्रं यथाऽलातचक्रं भ्रान्तदृशेरिह ॥ २०॥

विद्योतते नात्मविद्या यावत्तावच्चिदम्बरे ।
विविधं भाति विश्वं खे गन्धर्वनगरं यथा ॥ २१॥

आरोपितजगद्बाध आत्मैकः परिशिष्यते ।
शत्रून्हत्वाखिलान्युद्धे महावीरो यथैककः ॥ २२॥

विक्षेपः शिष्यते मायावरणेऽपि विघातिते ।
उपादाने विनष्टेऽपि कार्यं तिष्ठति हि क्षणम् ॥ २३॥

समे प्रारब्धभोगेऽपि ज्ञानी क्लिश्यति नाज्ञवत् ।
समेऽप्यध्वश्रमेऽध्वज्ञो दैन्यं नैति यथाज्ञवत् ॥ २४॥

पतत्वद्य युगान्ते वा वपुर्मुक्तस्य चित्तनोः ।

कुम्भे भग्ने स्थिते वा द्योर्हानिलाभौ कुतस्ततः ॥ २५॥

सङ्कल्पमात्रं विश्वं सद्भाति मन्दमतेर्यथा ।
सङ्कल्पमात्रभाता स्त्री सत्या विरहिणो भ्रमात् ॥ २६॥

स्वस्वरूपस्थितौ सत्यां दुःखं नैव सुखात्मनि ।
यथा वास्यादिके त्यक्ते कष्टं त्वष्टरि नैव तत् ॥ २७॥

नाध्यात्मिकादिछन्नोऽपिजात्वेकरसतां विभुः ।
त्यजत्यात्मा यथा लोके पटतां चित्रितः पटः ॥ २८॥

कामं सृजतु कूटस्थे माया विश्वं चिदम्बरे ।
नास्य लाभो न वा हानिर्वर्षत्याब्दे यथा दिवः ॥ २९॥

करणव्यवहारैस्तु कूटस्थात्मा न लिप्यते ।
न लिप्यते यथा कूटो लोहानामपि ताडनैः ॥ ३०॥

तत्तन्मय इवाभातोऽप्यात्मा कोशेभ्य उत्तरः ।
तेभ्यो विवेचितः शुद्धः स्फटिको रङ्गतो यथा ॥ ३१॥

मुक्तात्मा व्यवहारेऽपि स्थितस्तेन न लिप्यते ।
असङ्गत्वात्ततोऽन्यत्वात्पद्मपत्रमिवाम्भसा ॥ ३२॥

देहादितापतप्तोऽहमिति धीरविवेकिनः ।
पुत्रदारेषु तप्यत्सु तपमीति मतिर्यथा ॥ ३३॥

सच्चिदानन्दरूपोऽहमेवं निश्चयवानपि ।
मर्त्योऽस्मीति कदाचिद्दिग्भ्रमवन्मनुते क्षणम् ॥ ३४॥

निराकृत्य त्यजेद्विश्वं सारमास्वाद्य नीरसम् ।
यथा त्यजति निःसारं फलं स्वादु रसं पिबन् ॥ ३५॥

नात्यन्तासन्नमात्मानं मूढः पश्यति दुष्टदृक् ।
यथा दिवान्ध उदितमर्कं लोकप्रकाशकम् ॥ ३६॥

विभाव्याज्ञोऽन्यं प्रपञ्चं सुखं चापि बिभेति यः ।
दीपादिता दृश्यमानां स्वच्छायामिव बालकः ॥ ३७॥

माया खादिविकारैर्न ब्रह्मान्यथयितुं क्षमा ।
विमलं खं यथाऽध्यस्तधर्मा मलिनतादयः ॥ ३८॥

व्यभिचारिसुषुप्त्यादिदशा बुद्धिगुणोदिताः ।
बुधे स्वीया न निर्मोका यथा सर्पगुणोदिता ॥ ३९॥

व्यवहारोऽङ्गसापेक्षः प्नो(?ज्ञो) जाग्रदितीक्षितुः ।
गृहिणो गेहसापेक्षबाह्यान्तर्व्यवहारवत् ॥ ४०॥

यस्य निद्रा समाधिर्वा सुखा सर्वोपसंहृतिः ।
व्यापारकुलितस्येव सुखा सर्वोपसंहृतिः ॥ ४१॥

कामं करोतु विधितो मुक्तः कर्तास्य तेन किम् ।
स्तोकाभ्रच्छादितोऽर्को यो राहुग्रस्तो भवेत्स किम् ॥ ४२॥

मिथ्याजगत्समुल्लासात्प्रबुद्धस्य कथं भयम् ।
व्याघ्रादीन्पश्यतः स्वप्नात्प्रबुद्धस्य कथं भयम् ॥ ४३॥

आदेयात्मनिरीक्षार्थमनात्मधियमुज्वलाम् ।
यथाऽऽस्यहीनमुकरो मुखसौन्दर्यवीक्षणे ॥ ४४॥

क्रमेण वर्धमानेऽन्तर्बोधे हार्दतमःक्षयः ।
कलाभिर्वर्धमानेऽब्जे यथा नैशतमःक्षयः ॥ ४५॥

प्राज्ञोऽपि बोधितोऽन्तर्दृग्जानात्यन्यन्न किञ्चन ।
ग्रासे ग्रासे बोधितोऽपि निद्राण इव बालकः ॥ ४६॥

स्वानुभूतिरसास्वादे विषया विरसा विदः ।
यथाऽऽरनालं विरसं परमामृतपायिनः ॥ ४७॥

पूर्वाभ्याससमाधिं ज्ञो वाञ्छत्याप्ताखिलात्मनः ।
कालात्ययाय राजेव सुसमृद्धोऽपि देवनम् ॥ ४८॥

नाऽऽनन्दयति विध्यादि निस्त्रैगुण्याध्वचारिणम् ।
निर्व्यापारालसनरं देशिका देशिनं यथा ॥ ४९॥

चिन्तयानोऽपि तत्त्वं स्वं स्वच्छन्दो न नियम्यते ।
साम्राज्यगं स्वतन्त्रं च प्रजाभिरिव राट्सुतः ॥ ५०॥

परमार्थदृशः क्वापि नेष्टानिष्टे शुभाशुभे ।
वृष्ट्याऽवृष्ट्याऽप्पूरस्थसस्यवृद्धिक्षयाविव ॥ ५१॥

श्रुत्याद्यावृत्तियोगाग्न्युज्वलितः पूर्वरूपभाक् ।
जीव आत्मैव चागन्तुमलदाहे सुवर्णवत् ॥ ५२॥

कीटभ्रमरदृष्ट्या न चित्रं स्वध्यानतः स्वता ।
नामरूपोपाध्यपाये सत्यैक्यं सरिदब्धिवत् ॥ ५३॥

चित्रप्रापञ्चिकैश्वर्यं तत्त्वज्ञं रञ्जयेत्कथम् ।
हावैः स्त्रीवेषधृक्स्वज्ञहृदुन्मथयतीह किम् ॥ ५४॥

ज्ञानी क्षीणान्यकर्मापि प्रारब्धं सहतेऽवशी ।
व्यालग्राही गृहीताहिर्यथा तत्कृतपीडनम् ॥ ५५॥

प्राप्तकामं स्थितप्रज्ञं स्वयं कामा विशन्ति तैः ।
शान्तो नोत्सर्पति यथा पूर्णाब्धिरचलाम्बुभिः ॥ ५६॥

या षट्पञ्चाशिका वासुदेवानन्दीयमुद्गता ।
वानवासीपुरि तया प्रीयतामत्रिनन्दनः ॥ ५७॥

श्री परमपूजनीय श्रीवासुदेवानन्दसरस्वतीविरचिता
षट्पञ्चाशिका सम्पूर्णा ॥